संवत = १८६० लेखक-राम
पूर्व मीमांसा प्रकरणं
त्वेआर्थ प्रसं चात् आम्नायस्य क्रियार्थत्वात्

प्रयोजनाभावहि द्वे यनि बेद्यमानयोः प्रशस्त्य

25 × 11 × 0.1 c.m.

Note- पेज फटे हुए है।

62

त्वेऽप्यानर्थक्यप्रसंगात् स्वाध्यायस्य क्रियार्थत्वात् न चेष्टापत्तिः स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना
यनेकर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वस्य बुबोधयिषितत्वात् ऽपाततत्वेनानर्थक्यानुपपत्तेः
विधिशेषाणां निषेधशेषाणां च तत्र वायव्यं श्वेतमालभेत भूतिकामः इत्यादिविधिशेषस्य वायुर्वै क्षेपिष्ठा देवतेत्या
र्थवादस्य प्राशस्त्यबोधकतयार्थवत्त्वं बर्हिषि रजतं न देयमित्यादिनिषेधशेषस्य सोऽरोदीद् यदरोदीत्तद्रुद्रस्य
रुद्रत्वं इत्यादेर्निषेध्यनिन्दितत्वबोधकतयार्थवत्त्वं न च प्राशस्त्यादिबोधस्य निःप्रयोजनत्वेनानर्थक्यं तदवस्था
र्थवत्त्वमिति वाच्यं श्वेतमालभेतेत्यादिविध्युद्देशस्य ... मानस्य पुंसः प्रवृत्त्यादिजनकत्वमतः ... विधिनैकवाक्यतया न
दुक्तविरोधे गुणवादः स्यादनुवादोऽवधारिते भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति त्रिधार्थवादः प्रमाणा
न्तरविरोधे सत्यर्थवादो गुणवादः यथादित्यो यूप इत्यादि यूपेऽ आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्व
लत्वरूपगुणो लक्षणया प्रतिपाद्यते प्रमाणान्तरावगतार्थबोधकोऽनुवादः यथाग्निर्हिमस्य भेषजमित्यादिः
हिमविरोधित्वस्याग्नेः प्रत्यक्षावगतत्वात् प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः यथेन्द्रो
वृत्राय वज्रमुदयच्छत् इत्यादिः एवं च यजेत स्वर्गकाम इत्यादिविधिवत् वेदस्य सार्वत्रिकपरत्वाद्धर्मप्रति
पादकत्वं सिद्धं सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रे
यसहेतुः न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ... इति भगवद्गीतास्मृतेरेव प्रमाणत्वात् स्मृ
तिचरणे तत्प्रामाण्यस्य स्थितत्वात् अल्पानामपि बोधाय भास्करेण सुमेधसा रचि
तोऽयं समासेन जैमिनीयार्थसंग्रहः इति श्रीमन्महामहोपाध्यायलौगाक्षिभास्करविरचितः पूर्वमीमांसाप्रकरणं

यानव्यतिरिक्तविषयकत्वं विधीयते न तु यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्वेवेति नन्वेवं सामान्यमा
त्रप्राप्तस्य विशेषे संकोचो न नन्नु पादयत्वं लाघवास्यर्थ्युदासस्य भेदेन स्यादिति चेन्न उपसंहारे हि तन्मात्रे संकोचार्थः यथा पुरोडा
शं चतुर्धा करोतीति सामान्यप्राप्तं चतुर्धाकरणं आग्नेयं चतुर्धा करोतीति विशेषादाग्नेयपुरोडाशमात्रे संकोच्यते
पर्युदासस्तु तदन्यमात्रसंकोचार्थः इति तन्नो भेदात् कुत्रचिद्विकल्पप्रसक्तावपि तेन न्यागत्याप्रघे षोडशिग्रहणं यथा
नातिरात्रे षोडशिनं गृह्णातीत्यादौ अतिरात्रे षोडशिनं गृह्णातीति प्राप्तस्य प्राप्तषोडशिग्रहणस्य निषेधाद्वि
कल्पप्रसक्तावपि न पर्युदासाश्रयणं संभवात् न ह्यत्र यद्वा यदर्थेन नञ्यायं पर्युदासात् अतिरात्रे षोडशिव्यति
रिक्तं गृह्णातीति वाक्यार्थबोधः स्यात् संभवति अतिरिक्तविधिविरोधात् अतो नञ्स्यापाशास्त्रप्राप्तषोड
शिग्रहणस्यैव निषेधः न च विकल्पप्रसक्तिः तस्याप्याश्रयणीयत्वात् उपांशुत्वविशेषोपि विकल्पादेकप्रति
षेधविप्रतिषिध्यमानस्यानर्थहेतुत्वं विधिनिषेधोभयस्यापि तत्त्वर्थत्वात् यत्र तु न विकल्पः प्राप्तिप्रसञ्
जनत एव प्रतिषेधस्य पुरुषार्थः तत्र निषिध्यमानस्यानर्थहेतुत्वं यथा न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्ष
णनिषेधस्य पुरुषार्थत्वात् न च दीक्षितो न ददाति न जुहोतीत्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधादि
कल्पापत्तिरिति वाच्यं स्वतः पुरुषार्थमूलदानहोमादीनां निषेधस्य पुरुषार्थत्वात् निषिध्यमानस्यान
र्थहेतुत्वं यथा न लोकस्त्रीगमनादेः तन्निषेधस्य क्रत्वर्थत्वेन तस्य वेगुण्यसंपादकत्वात् प्राशि
त्रमवदानं परिहरति वाक्यप्रतिषिद्धप्रतिषेधे दक्षिणस्य लवदानमपायप्रयोजनवदर्थवदवदाने न चापि न ह्यर्थी...
र्थप्रतिपादने प्रयाजननानावगतिर्धेय निषिध्यमानयोः प्राशित्रस्य निषिद्धतत्त्वे लवदानमपायप्रतिपादयति...